अरुणाचलक्षेत्रवासिनः

भगवतः

श्रीरमणमहर्षेः

अन्तेवासिना

वासिष्ठगणपतिमुनिना

प्रणीता

# गीतमाला.

प्रथमावृत्तिः

१९३१.

रजतपीठस्थितेन प. नारायणप्रभुणा

स्वकीय प्रभाकर मुद्रणालये

मुद्रिता.

अरुणाचलक्षेत्रवासिनः

भगवतः

श्रीरमणमहर्षेः

अन्तेवासिना

वासिष्ठगणपतिमुनिना

प्रणीता

# गीतमाला

(अत्र अग्नि, गणपति, इन्द्र, वायु, सूर्य, दशावतार, अम्बिका, रेणुका, गुरु, योगसार गीतानि दश सन्ति)





**वासिष्ठगणपतिमुनिः**

# ॥ गीतमाला ॥

## ॥ प्रथमम् ॥

### ॥ अग्निगीतम् ॥

१. वाचमधितिष्ठञ्ज्योतिरपि भौमम् ।
किंचिदपि दैवं गेयमविरामम् ॥

२. स क्रतुषु होता विप्रमुखवासी ।
अत्ति च स हव्यं वेदितलभासी ॥

३. पावक वसुस्त्वं ज्वालशतमाली ।
कश्चिदसि रुद्रः शास्त्रशतशाली ॥

४. पावक यदास्ये भासि मनुजानाम् ।
ते नदिह राज्यं बिभ्रति पशूनाम् ॥

५. अस्मि तव दास्ये संचर मदास्ये ।
सत्भदसि मोहं यामि न यथाहम् ॥

६. नास्ति शरणं मे कोऽप्यवनिपृष्ठे ।
अग्निमवनार्थी देवमुपतिष्ठे ॥

७. अस्ति करमाली कोऽपि दिवि राजा ।
एष ननु कीली भाति भुवि राजा ॥

८. आह्वयति भानुं प्रातरशनाय ।
त्वामनल यज्वा सायमशनाय ॥

९. एकममृतत्वां प्रातरपि सायम् ।
श्रोतुमयि वाणीराह्वयति सोऽयम् ॥

१०. दीप्ततरकील त्वं भजसि हव्यम् ।
नेतरपि वाचां स्तोत्रमपि भव्यम् ॥

११. अस्मि न समर्थो यज्ञमपि कर्तुम् ।
स्तोत्रमवलम्बे शर्म तव भर्तुम् ॥

१२. पार्थिवविभूतिस्त्वं पचनकारी ।
वैद्युतविभूतिर्वाकपटलधारी ॥

१३. त्वं पचनकारी भास्युदरभाण्डे ।
वाकपटलधारी देव कुलकुण्डे ॥

१४. भास्युदर भाण्डे भासि कुलकुण्डे ।
किं च हृदि जीवो भास्यनल पिण्डे ॥

१५. स्वस्य हृदि रूपं त्वामनल लोके ।
भामि विमलोऽयं धाम्नि गतभीके ॥

१६. त्वां तमहमर्थं यः स्मरति नित्यम् ।
पावक विशोकः पश्यति स सत्यम् ॥

१७. यत्स्फुरणमन्तः स्वस्य धुतपापम् ।
ध्येयमिदमग्ने देव तव रूपम् ॥

१८. देव भवसि त्वं वह्निरिह लोके ।
सर्वद समन्ताद्विद्युदसि नाके ॥

१९. अत्र जननी ते भूमिरतिपूता ।
द्यौरनल देवी तत्र तव माता ॥

२०. अत्र वसवस्ते वायुसख हस्ते ।
वाचमनुभद्रास्तत्र तव रुद्राः ॥

२१. अत्र हृदि राजन्राजसि नराणाम् ।
तत्र वरदान्तः खेलसि सुराणाम् ॥

२२. अत्र जगदीश त्वं ज्वलननामा ।
तत्र मघवा त्वं निःसदृशधामा ॥

२३. दावनलशक्तौ पामरजनानाम् ।
स द्वितनुरेकः पण्डितजनानाम् ॥

२४. भानुरपि देवो लोक सुहृदेषः ।
व्यापककृशानो कोऽपि तव वेषः ॥

२५. देहि भगवन्मे सम्पदमुदाराम् ।
बुद्धिमपि वह्ने त्रातरतिधीराम् ॥

२६. देव वरदाग्ने त्वं भव ममास्त्रम् ।
बोधय च मह्यं सर्वमपि शास्त्रम् ॥

२७. सुप्रभ धिया त्वां व्यासमखिलानि ।
नौमि सकलानि क्षेमद जयानि ॥

२८. गाणपतमग्ने सर्वजनहृद्यम् ।
भातु भयहारि च्छन्द इदमाद्यम् ॥



## ॥ द्वितीयम् ॥

## ॥ गणपतिगीतम् ॥

१. भद्रतरमूर्तिं भद्रतमकीर्तिम् ।
रुद्रतनयं तं गायत महान्तम् ॥

२. ज्योतिरिह सूक्ष्मज्वालमतिदीप्तम् ।
भाति कुलकुण्डे योगिमनुजाप्तम् ॥

३. तन्नमत वाचो दैवतमुदारम् ।
सङ्कटशतानां यातुमिह पारम् ॥

४. तं गणपतिं यो विस्मरति लोके ।
सन्ततमभाग्यो मज्जति स शोके ॥

५. दम्पतिविहारः शीतशशिखण्डे ।
नन्दननिवासो दीप्तकुलकुण्डे ॥

६. मित्र कुरु भक्तिं विश्वयुवराजे ।
देहि हृदमुष्मै योगिनुतिभाजे ॥

७. अत्र सशरीरे मूलशिखिरूपी ।
योगविमुखो ना विन्दति न पापी ॥

८. ध्यायति सदान्तर्योऽग्रभुजमेतम् ।
तं भजति देवो सिद्धिरातिपूतम् ॥

९. तस्य वरभासा संद्रवति शीर्षम् ।
यस्य परितप्तं विन्दति सहर्षम् ॥

१०. योगविद् आहुः शीर्षरसधाराम् ।
सिद्धिशतहेतुं तामम्रृतसाराम् ॥

११. पीठमधिरूढं मूलसरसीजम् ।
सर्वभुवनानां नौमि युवराजम् ॥

१२. काचन रुचिस्ते भर्गसुत पूता ।
मङ्गलसुषुम्नामार्गचरमाता ॥

१३. भाग्यमखिलानां देव तव हस्ते ।
भूरि महिमानं वर्णयतु कस्ते ॥

१४. हस्तिवदनो ना सत्वमधिदैवम् ।
सङ्कटहरार्थैः सङ्गदितमेवम् ॥

१५. त्वत्पदसरोजे यस्य हृदि भक्तिः ।
काऽपि शिवसूनो तद्वचसि शक्तिः ॥

१६. त्वं खलु मघोनो धूतसुजनार्तिः ।
अत्र भुवि काचित्कार्यकरमूर्तिः ॥

१७. त्वां भजति गाढप्रीतिरतिशस्ता ।
सिद्धिरिति लक्ष्मीस्तामरसहस्ता

१८. सश्रियमुदारां श्रीहृदयहारी ।
संवितरतान्मे सर्वबलधारी ॥

१९. शीतनगजायाः सूनुरतिहृद्यां ।
भूरिकरुणो मे पूरयतु विद्याम् ॥

२०. वारणमुखो मे वारयतु कष्टम् ।
सर्वमपि देयाच्छर्वसुत इष्टम् ॥

२१. मां चरणभाजं पापहरनामा ।
पालयतु शम्भोः सूनुरतिधामा ॥

२२. निर्जितजराधिं निर्दलितरोगम् ।
दन्तिवदनो मे वर्धयतु योगम् ॥

२३. सुक्ष्मतमं मे कष्टहिमभानो ।
प्राणबलमग्र्यं देहि हरसूनो ॥

२४. वाचि मम दिव्यां धेहि निजधाटीम् ।
सिद्धिमजितास्यै देहि वरचेटीम् ॥

२५. हस्तिमुख याचे गाढरसभक्त्या ।
आविश विभो मां दिव्यनिजशक्त्या ॥

२६. देहि निजतेजः किङ्करजनाय ।
ईश्वर गणानां भारतहिताय ॥

२७. सर्वद जनोऽयं वांछति न मुक्तिम् ।
देशकुशलाय प्रार्थयति शक्तिम् ॥

२८. गाणपतमेतद्गीतमतिशुद्धम् ।
भातु भयहारि च्छन्दसि निबद्धम् ॥



॥ तृतीयम् ॥

॥ इन्द्रगीतम् ॥

१. धर्ता सुकृतानां हर्ता दुरितानाम् ।
भर्ता नभसो मे कर्तास्तु शुभानाम् ॥

२. ख्याताऽमितवीर्यो धूताखिलवैरी ।
नेता विबुधानां त्राता भवतान्मे ॥

३. विक्रम्य विधुन्वन्वक्रांत्समरेषु ।
चक्रायुधमित्रः शक्रः शरणं नः ॥

४. शक्रः शुभवित्तां लक्ष्मीमनिग्रत्ताम् ।
आनन्दितचित्तां मह्यं भुवि धत्ताम् ॥

५. नाकं त्वमरक्षः पाकं युधि जित्वा ।
वृत्रं च विधूयामित्रं पविपाणे ॥

६. एतानि विकुर्वन्भूतानि स पाकः ।
शुभ्रे विफलोऽभूदभ्रे तव जिष्णो ॥

७. पाकः प्रभुरेव प्राणांश्च विकर्तुम् ।
यद्यम्बरनाथ त्वं न प्रतिकर्तुम् ॥

८. न त्वं यदि रोद्धा वृत्रः परिभूय ।
प्रज्ञा-मयि विश्वं दद्यात्तिमिराय ॥

९. प्रज्ञामुषसं तां ज्ञं चाजित सूर्यम् ।
यद्रक्षसि वृत्रात्तत्ते सुरकार्यम् ॥

१०. सम्मोहनशक्तिर्वृत्रस्य तु निद्रा ।
सम्बोधनशक्तिर्विभुस्तव भद्रा ॥

११. नादान्तविभास्यं वेदान्तरहस्यम् ।
मोदान्तरयोध्यं भेदान्तकमीडे ॥

१२. खे वायुमनन्तं रुद्रं निनदन्तम् ।
भान्तं मघवन्तं वन्दे भगवन्तम् ॥

१३. तारं मदनारिं प्राणं पवमानम् ।
देवं मघवानं ध्यायाम्यतिमानम् ॥

१४. वीर्यं सकलं त्वद्देवेश्वर नूनम् ।
देवासुरमर्त्यैर्युक्तं जगदूनम् ॥

१५. निर्जित्य समस्तान्भावानपि जिष्णो ।
सम्राड् भुवनानामासीः प्रभविष्णो ॥

१६. नाभेत्स्य इमं चेद्वृत्रं दिवि वीरम ।
नाभोक्ष्यदधारे मेघो भुवि नीरम् ॥

१७. गोपायसि विश्वं शश्वद्धरितीः ।
स्वर्नाथ विधुन्वन्वृत्रस्य विभूतीः ॥

१८. चत्वारि वपूंषि प्राहुर्मुनयस्ते ।
येषां जगदेतद्देवाधिप हस्ते ॥

१९. रूपाणि विभो ते भूयांसि ततानि ।
दिङ्मात्रतयाद्यैश्चत्वार्युदितानि ॥

२०. सर्वस्य च कर्ता सर्वस्य च धर्ता ।
प्राणः पुरुहूतः को नाम स गीतः ॥

२१. सूत्रं विदुरेके सुश्लोकमनन्तम् ।
केचिद्विधिमाहुः कं तं भगवन्तम् ॥

२२. विश्वस्य निदानं विश्वातिगमानम् ।
एतं विदुरन्ये वायुं पवमानम् ॥

२३. सर्वस्य च नेत्री सर्वैरपि मान्या ।
गीर्वाणपते ते कालस्तनुरन्या ॥

२४. रुद्रं विदुरेके नेतर्बहुलीलम् ।
प्राहुर्यममन्ये कायं तव कालम् ॥

२५. कालोऽयमनादिः सूर्यादपि पूर्वः ।
भाक्तो जनिवादस्तस्याजर सर्वः ॥

२६. सद्व्यापकशक्तिं प्राणं कथयन्ति ।
व्यक्तेतरशब्दं कालं गणयन्ति ॥

२७. व्यक्तेतरशब्दान्नैव प्रणवोऽन्यः ।
तस्येन्द्र तवाङ्के विश्राम्यति धन्यः ॥

२८. सच्छक्तिरभाणि प्राणः परमस्य ।
चिच्छक्तिरगादि प्राज्ञैः प्रणवोऽस्य ॥

२९. सर्वत्र विसारि ज्योतिस्तदिदाख्यम् ।
देवेन्द्र शरीरं गीतं तव मुख्यम् ॥

३०. प्राणं प्रणवं च ज्योतिश्च विसारि ।
दैवं नयदेकं वन्दे भवधारि ॥

३१. एकः स तिसृणामस्थूलतनूनाम् ।
राजत्यभिमानी राजा भुवनानां ॥

३२. दृश्यस्य परस्ताद्ब्रह्मागुणमस्ति ।
इन्द्राभिधया तत् दृश्येत्र चकास्ति ॥

३३. बन्धुर्भुवनानां सूर्यस्ततकीर्तिः ।
राजन्नमराणां तुर्या तव मूर्तिः ॥

३४. देव प्रतिबिम्बीभूय प्रसि सूर्यम् ।
विश्वस्य महेन्द्र त्वं पश्यति कार्यम् ॥

३५. नो केवलमर्के पिण्डेषु च तातः ।
अन्तः प्रतिबिम्बीभूतः पुरुहूतः ॥

३६. पिण्डे प्रतिबिम्बीभूतं पुरुहूतम् ।
वैश्वानरमाहुर्लोकत्रयतातम् ॥

३७. नान्यानि किल त्वद्रूपाण्यखिलानि ।
मायिन्विभवं ते किं वा कथयामि ॥

३८. पाहि त्रिदशानामीशान कृशान्नः ।
भूयात्तव देव स्तोता बहुलान्नः ॥

३९. सर्वं भवताऽहं पक्षेण जयानि ।
ईशो भुवि लोके नाकेश भवानि ॥

४०. आविश्य विभो मां कर्तुं भुवि कार्यम् ।
संप्रेषय किंचिद्दिव्यं तव वीर्यम् ॥

४१. धाता भुवनानां नेता त्रिदशानाम् ।
आविश्य विभुर्मामाभातु सुकर्मा ॥

४२. इन्द्रं प्रभजन्तामेतास्तनुमध्याः ।
नाथं गुणवत्यो यद्वत्तनुमध्याः ॥



## ॥ चतुर्थम् ॥

## ॥ वायुगीतम् ॥

१. दिष्टात्पतितोऽहं मन्दे नरवृन्दे ।
त्राणाय समीरं तं सम्प्रति वन्दे ॥

२. तारासुमचित्रं खेलत्खगजालम् ।
उद्यानमिदं ते खं वात विशालम् ॥

३. देवोऽसि बलस्य प्राणोऽस्यखिलस्य ।
ब्रूयादतिमानं कस्ते महिमानम् ॥

४. भक्त्या तव पुण्यं तुल्यं क्व नु गण्यम् ।
तद्भक्ति चरित्रं रैक्वस्य पवित्रम् ॥

५. मेघः स च नाकः स्वल्पो नरलोकः ।
नित्यानिल शुभ्रं निःसीम तवाभ्रम् ॥

६. घुष्यन्नसि रुद्रो दीप्यन्नसि शक्रः ।
प्राणन्नसि वातस्त्रेधासि नुतोऽतः ॥

७. सर्वाश्च दिशस्ते व्योमेश्वर हस्ते ।
भाक्ता पुनरेषा कोणेडिति भाषा ॥

८. नित्याध्वग कर्तुं श्रान्ते परिहारम् ।
वासिष्ठवचोऽम्भो हृद्यं पिब धीरम् ॥

९. अन्नानि कृशानौ जुहत्वदरिद्राः ।
वायो जुहुमोऽमी वाचस्त्वयि भद्राः ॥

१०. यद्यप्ययि दिव्यो गुप्तस्तव वेषः ।
व्योमेश तथाऽपि [illegible] बोधः ॥

११. आकाशगृहाणामात्मासि सुराणाम् ।
वीर्यद्रविणानां कोशोऽसि नराणाम् ॥

१२. त्वामाह सरैक्कः संवर्गमनन्तम् ।
स्वस्मिंत्सुहृदानां दुःखानि हरन्तम् ॥

१३. मूलं तपसां त्वं देवासि ऋषीणाम् ।
लोके सकलानां हेतुश्च कृषीणाम् ॥

१४. दानार्थमसूनां प्राप्तक्षितिरङ्गाः ।
एते तव वाताः खेशान तरङ्गाः ॥

१५. आत्मा मरुतां त्वं कैरप्यसि गीतः ।
कैरप्यधिराजः कैरप्ययि तातः ॥

१६. आत्मा मरुतां त्वं गीतः पृषदश्वः ।
राजा पुरुहूतस्तातो निगमाश्वः ॥

१७. वातस्तव वीचिर्विद्युत्तव कायम् ।
तारस्तव शब्दो देवाधिय सोऽयम् ॥

१८. वेदादिमनादिं तारं प्रणवाख्यम् ।
ध्यायन्ति विदो ये तैः स्यात्तव सख्यम् ॥

१९. वातोऽस्यधिभूतं शक्रोऽस्यधिवेदम् ।
रुद्रोऽस्यधिपिण्डं पक्षान्तरमेवम् ॥

२०. गीताः कविराजा सर्वस्तवभाजे ।
एतास्तनुमध्यास्ताताय खराजे ॥

॥ पञ्चमम् ॥

॥ सूर्यगीतम् ॥

१. भुवनत्रयपतिमूर्धजमध्ये
दीप्यन्मणिरयमहिममयूखः ।
भुवनत्रयतोऽप्यधिको मूल्ये
भवतां सम्पदमतुलां भणतु ॥

२. एतन्मण्डलमतुहिनभानो-
र्भासां स्थानं निगमनिधानम् ।
विप्रैर्वन्द्यं काले काले
विश्वप्राणायतनं जयति ॥

३. शम्भोः केशे वपुषा केन
श्रोत्रे मातुर्वपुषा केन ।
राजसि नलिनीप्रिय दम्पत्यो
र्भूषणमसि वा पर्यायेण ॥

४. कश्चन दक्षिणनयनं भर्तु-
र्मूर्तिं कामपि भणति विदन्यः ।
अपरो भवनं भुवनं त्वितरः
प्राणं दशशतकिरण परस्त्वाम् ॥

५. प्राणिति भवता पश्यति भवता
खादति पाति च भुवनं भवता ।
भाति च भवता भास्कर भवतो
माहाभाग्यं न भणिति मार्गे ॥

६. हृदयं यद्वज्जीवानां नो
मण्डलमेतन्नाथस्यैवम् ।
तस्मादेतत्परिदृष्टान्तै
र्हृदयसमष्टिः कथिता शिष्टैः ॥

७. मण्डलमध्ये यत्तज्ज्योति-
र्हृदयस्यान्तर्यत्तज्ज्योतिः ।
भवति तदस्मिन्नक्षिणि गम्यं
रम्यं पूर्णं मम खलु काम्यम् ॥

८. क्षेत्रे क्षेत्रे बहुशोऽन्विष्टं
लोचनमण्डलमध्ये दृष्टम् ।
कष्टं गलितं फलितं चेष्टं
पुनरस्माकं किं परिशिष्टम् ॥

९. साक्षिणमक्षिणि निश्चलदृष्ट्या
निर्मलनभसि स्थितया द्वारा ।
लक्ष्यं रात्रावपि दिननाथं
पश्यत नश्यं मुंचत निखिलम् ॥

१०. नरकामानामयमिह राजा
जागर्त्यक्षिणि सायं पाता ।
सुरकामानामीशानोऽसौ
सूर्ये भाति प्रातः पाता ॥

११. ज्ञानाकारं तेजः पश्य-
त्प्रतिबिम्बं वा पुंसो हैमम ।

धीरो ध्यायन्नयनस्थाने
पाशैर्मुक्तः कृतकृत्यः स्यात् ॥

१२. निःशेषाभिः सहितं श्रीभि-
र्निर्हतपापे दहरसरोजे ।
कृतिनः किरणैरंगुष्ठाभं
तं लोकेरन्पुरुषमणिष्ठम् ॥

१३. परमविदुस्त्वां पावकमवनौ
दिवि रविमम्बरभुवने शक्रम् ।
आत्मानं वा ज्योतिर्वैकं
जगतां भेदात्कवयस्त्रेधा ॥

१४. वैभवशाली दीधितिमाली
प्रशमितपापस्त्रिभुवनदीपः ।
दिवि भाति रविर्यत्राचरत-
श्चरतश्चेशितृपरमं ज्योतिः ॥

१५. जयति विवस्वान्दशशतधामा
जयति च तस्मिन्परमं धाम ।
पादाकुलकैर्नुतिरदसीया
गणपतिमुनिना रचिता जयति ॥



॥ षष्ठम् ॥

## ॥ दशावतारगीतम् ॥

१. वेदचोरमाशरं विमथ्य सोमकं पुरा·
युः स्मृतिं ध्रुवां पुनः सुताय भास्वतो ददौ ।
सिन्धुवारि बन्धुरास नौधरस्तपस्विनां
यश्च तं सखे भजस्व झाषवेषमच्युतम् ॥

२. मन्दराद्रिधारिणे महेन्द्रकार्यकारिणे
मौनिचित्तचारिणे महोग्रपापहारिणे ।
अञ्जलिं कुरुष्व भोर्हरिल्लतान्तमंजुल
स्वच्छकीर्तये विलासकृच्छपाय विष्णवे ॥

३. कांचनाक्षमुष्णरश्मिजालया दृशैकया
च्यावयन्तमोजसः प्रदीप्तघोरतारया ।
सान्त्वयन्तमन्यया दयार्द्रया वसुन्धरां
शीतलत्विषा हरिं किरिच्छलं स्मरान्तरे ॥

४. प्राणमुज्जहार दैत्यवक्षसो विदारिता
यो नखैरखर्वशक्तिपौरुषोज्वलन्नुषा ।
आसुरात्कुलाच्छ्रियं सुपर्वचेतभो भियं
नारसिंहमूर्तिरार्तिमच्युतः स हन्तु ते ॥

५. त्रीणि यः पदान्यजः समंततो विचक्रमे
नांगुलं यथात्यरिच्यतात्र दिव्यमुत्र वा ।
नाकचारिणोऽधिकर्तुमाशु हर्तुमासुरीं
सम्पदं च तं परं पुमांसमाश्रयस्व रे ॥

६. योऽर्जुनं भुजाबलेन निर्जिगाय दुर्जयं
चेतसा वशंवदेन यश्च भूदनन्यजम् ।
लोभमासमुद्रभूमिदानकर्मणाजय-
द्रैणुकेयभूमिकः स ते स्वनाद्धियं हरिः ॥

७. वाक्यकृत्सुतः पितुः प्रभुश्च रक्षिता विशा-
मग्रजोऽतिवत्सलो नियामकोऽनुजन्मनाम् ।
श्रीकरः सतां सखा द्विषां च भीकरो रिपुः
सीतया कलत्रवान्नरो हरिर्धिनोतु वः ॥

८. भूमिभारवारणाय यो यदुष्वभूद्विभु-
र्विस्मयं शिशोश्च यस्य चेष्टितानि तेनिरे ।
शर्म वः स पूरुषो रथाङ्गमायुधं दध-
त्कर्मयोगदेशिकः करोतु पार्थसारथिः ॥

९. भारतं न केवलं चतुःसमुद्रमुद्रितं
भूमिखण्डमेव योऽभ्यभूषयन्निजैर्गुणैः ।
तस्य पूरुषोत्तमस्य बुद्धनामधारिणः
पावनी कथा मुदे विदां नदीव नाम्भसी ॥

१०. गायत स्तुनाद्रियध्वमाश्रयध्वमुत्तमं
पूरुषं पुराणमर्कमण्डलान्तरालयम् ।
कल्कभारवारणाय कल्किभूमिकाधरो
योऽयमस्य भूतलस्य रक्षणाय चेष्टते ॥



॥ सप्तमम् ॥

## ॥ अम्बिकागीतम् ॥

१. सेवकपातकशमनं दैवं
मानसवांछितफलदं दैवम् ।
सज्जनरक्षणचतुरं दैवं
दुर्जनमर्दनपरुषं दैवम् ॥

२. भास्करबिम्बे दीप्तं दैवं
लोचनमध्ये सुप्तं दैवम् ।
सितकरमण्डलगुप्तं दैवं
त्रिगुणितभुवनव्याप्तं दैवम् ॥

३. बहुशतचेटीसहितं दैवं
रेणुसमष्ट्या विहितं दैवम् ।
अम्बरसौधे निहितं दैवं
भैरववदनाभिहितं दैवम् ॥

४. असुरुचिपद्याभूतं दैवं
वसुरुद्रार्कैर्गीतं दैवम् ।
क्षितिजलशुचिषु प्रोतं दैवं
शितमतिभिः समधीतं दैवम् ॥

५. मृदुहृदयानां सौम्यं दैवं
प्रियरूपाणां रम्यं दैवम् ।
तत्त्वज्ञानां विश्वं दैवं
गुणविरुचीनां शून्यं दैवम् ॥

६. चालकमवनेः शक्त्या दैवं
शम्पाद्वारा दृश्यं दैवम् ।
दोग्ध्रीमनुवरवाच्यं दैवं
विदधद्विनतमशोच्यं दैवम् ॥

७. शैले शैले विहरद्दैवं
विपिने विपिने विचरद्दैवम् ।
ग्रामे ग्रामे ख्यातं दैवं
नगरे नगरे प्रथितं दैवम् ॥

८. परितो योम्नि निराकृति दैवं
स्वर्गे पौलोम्याकृति दैवम् ।
हिमवति गौरीरूपं दैवं
तनुषु प्राणाकारं दैवम् ॥

९. अर्धं सुरगिरिधनुषो दैवं
भुवनत्रितये पूर्णं दैवम् ।
हृदि भूतानां किंचिद्दैवं
तृणवन्मनसि प्रचुरं दैवम् ॥

१०. लज्जाभावो ललितं दैवं
रसनाभावो भीमं दैवम् ॥
दृष्टौ दृष्टौ सूक्ष्मं दैवं
विषये विषये स्थूलं दैवम् ॥

११. स्तोत्रे स्तोत्रे मधुरं दैवं
ध्याने ध्याने मदकृद्दैवम् ।

नमने नमने वरदं दैवं
चरिते चरिते पूतं दैवम् ॥

१२. आकाशामलगात्रं दैवं
ताराविशशिनेत्रं दैवम् ।
व्यापकपवनश्वसितं दैवं
पारावारस्वेदं दैवम् ॥

१३. लीलानारीवेषं दैवं
दिव्यहिरण्मयभूषं दैवम् ।
केषांचित्कृतपोषं दैवं
केषांचित्कृतशोषं दैवम् ॥

१४. पोषविधाने शीतं दैवं
शोषविधाने तपनं दैवम् ।
सर्गविधाने विकसद्दैवं
प्रलयविधाने मीलद्दैवम् ॥

१५. सोमं पीत्वा पुष्टं दैवं
द्विषतो हत्वा हृष्टं दैवम् ।
भुवनप्रलये शिष्टं दैवं
सर्वपदार्थोत्कृष्टं दैवम् ॥

१६. कौलाचारिषु माद्यद्दैवं
समयाचारिषु शान्तं दैवम् ।
योगाचारिषु पीनं दैवं
ज्ञानाचारिषु लीनं दैवम् ॥

१७. कामविरोधि कलत्रं दैवं
गणपषडाननपुत्रं दैवम् ।
पापविदारि पवित्रं दैवं
जयति मुनिस्तुतिपात्रं दैवम् ॥



॥ अष्टमम् ॥

## ॥ रेणुकागीतम् ॥

१. सुरशिरश्चरच्चरणरेणुका ।
जगदधीश्वरी जयति रेणुका ॥

२. देवनाशिरोदेशलालितम् ।
रेणुकापदं दिशतु मे मुदम् ॥

३. कुण्डलीपुरीमण्डनं महः ।
किमपि भासतां मम सदा हृदि ॥

४. मस्तकैनवं वस्तु शाश्वतम् ।
अस्ति मे सदा शस्तदं हृदि ॥

५. आदिनारि ते पादपङ्कजम् ।
स्फुरतु मे मनः सरसिजे सदा ॥

६. केवलं पदोः सेवकोऽस्मि ते ।
वेद्मि नेतरद्वेदसन्नुते ॥

७. हृदय तेणुनः समुचितोऽणुना ।
परिचयोऽम्बिकापादरेणुना ॥

८. पाहि मुंच वा पादपङ्कजम् ।
त्रिदशसन्नुते न त्यजामि ते ॥

९. चरणमम्ब ते यो निषेवते ।
पुनरयं कुचौ धयति किं कृती ॥

१०. अहरहोऽम्ब ते रहसि चिन्तया ।
धन्यतां गतो नान्यदर्थये ॥

११. स्मरजितो यथा शिरसि जाह्नवी ।
जननि रेणुके मनसि ते कृपा ॥

१२. अम्ब पाहि मां दम्भतापसि ।
पादकञ्जयोरादिकिङ्करम् ॥

१३. पुत्रमात्मनः पुण्यकीर्तने ।
बहुकृपे कुतो मामुपेक्षसे ॥

१४. अम्ब संस्तुते जम्भवैरिणा ।
पाहि मामिमं मग्नमापदि ॥

१५. तत्त्ववादिनः सत्त्वशालिनि ।
त्वामजे विदुः सत्स्वरूपिणीम् ॥

१६. त्वां प्रचक्षते सदयवीक्षिते ॥
वेदवेदिनो मोदरूपिणीम् ।

१७. संविदं विदुस्त्वामिदं प्रसु ।
परमयोगिनः परमदेवते ॥

१८. जननि कुण्डलीपुरनिवासिनि ।
परशुरामवत्पश्य मामिमम् ॥

१९. तनयरोदनं श्रवणशालिनि ।
शृणु सुरार्चिते यदि दया हृदि ॥

२०. याचकः सुतो भजनमीप्सितम् ।
तदपि दुर्लभं किमिदमम्बिके ॥

२१. मास्तु वेतनं छिन्नमस्तके ।
भजनमेव ते याच्यते मया ॥

२२. तरलतारया जलजदीर्घया ।
सानुकम्पया शीतपातया ॥

२३. केवलं दृशा पश्य रेणुके ।
तेन मे शुभं न च तवाशुभम् ॥

२४. किङ्करीभवत्सुरविलासिनी ।
जयति कुण्डलीनगरवासिनी ॥

२५. मधुरमम्ब ते चरणपङ्कजम् ।
तत्र यद्रते स्त्यज्यतेऽखिलम् ॥

२६. चरणमम्ब ते चरतु मे हृदि ।
इयमनामये प्रार्थना मम ॥

२७. भुजगकङ्कणप्रभृति संस्तुते ।
भुजभुवामरेर्जननि पाहि माम् ॥

२८. कुण्डलीपुरीमण्डनायिता ।
गणपतिस्तुता जयति रेणुका ॥

॥ नवमम् ॥

## ॥ गुरुगीतम् ॥

१. अव्यक्ताद्यत एतद्व्यक्तं जातमशेषम् ।
यद्वृत्ते तदजस्रं यत्रान्ते लयमेति ॥

२. आधारे खलु यस्मिन्गोलानां सह लक्षैः ।
ब्रह्माण्डं प्रतितिष्ठत्येतन्निस्तुलसत्वे ॥

३. सूर्यादिग्रहभासां यन्मूलं घनतेजः ।
यद्ब्रह्मादिसुराणां शक्त्यै शक्तिरुताहो ॥

४. ज्ञात्वा तत्त्वमसङ्गा भासा यस्य रमन्ते ।
यज्जालेन समस्ते द्वैतेक्षाल्पमतीनाम् ॥

५. यद्ध्यानेन भवन्ति स्वात्मानन्दनिमग्नाः ।
यन्निष्ठा खलु मुक्तिर्यच्छन्दोऽपि तदर्थः ॥

६. तद्ब्रह्म प्रणवाख्यं चित्ते ध्यानकृते मे ।
अश्रान्तं रमणाख्यां बिभ्रद्धातुमदिष्टाम् ॥

७. आधारे धृतमूलं हार्दाब्जे कृतवासम् ।
शीर्षाब्जाय वहद्यत्पश्चादिन्द्रियशक्त्यै ॥

८. दृष्टयां तत्र पराच्यां यद्देहभ्रमकारि ।
आवृत्तं तु पुनर्यत्स्वात्मैक्यानुभवाय ॥

९. पश्यद्वा विषयौघं विश्रान्तं यदुताहो ।
मुक्त्यै संस्थितमन्तर्वृत्त्यैक्यानुभवेन ॥

१०. आत्मज्योतिरिदं मे विश्राणं रमणाख्यम् ।
अश्रान्तं स्फुरतात्तच्छुद्धं हार्दसरोजे ॥

११. यद्दीपाद्रमणाख्याद्व्याप्तं गाणपतीषु ।
वाणीभित्तिषु धत्ते गीताचित्रविलासम् ॥

१२. यद्धन्ति च्छविजालैरज्ञानानां तिमिराणि ।
तत्तत्त्वं स्फुरताद्वस्तारध्यानसमाधौ ॥

१३. यातायातविहारैराधारेषु च शीर्षे ।
संचारं विदधानं किंचाशेषविसारि ॥

१४. आलम्बेन विहीनं व्योमाभं परिपूर्णम् ।
निःशब्दं गुरुरूपं तद्ब्रह्म स्फुरतान्मे ॥

१५. ज्ञानं भाति परोक्षं यत्तत्त्वश्रवणेन ।
यत्साङ्गत्यविशेषो हेतुः स्यादपरोक्षे ॥

१६. यच्चिन्ता स्थिरमुक्त्यै ब्रह्मैतद्रमणाख्यम् ।
मामावृत्य समन्तादानन्दे निदधातु ॥

१७. तारानन्दनियुक्तः प्रीत्या तस्य मतेन ।
आधाद्दीप्तगभीरं वासिष्ठो गुरुगीतम् ॥



॥ दशमम् ॥

## ॥ योगसारगीतम् ॥

१. निशितया धिया हृदि निभालनम् ।
भुवनभूपतेर्भवनशोधनम् ॥

२. दहरमज्जनं विदधतं जनम् ।
बहुलसम्मदं नयति धीः पदम् ॥

३. अहमिति स्मृतेर्व्रज जनिस्थलम् ।
भवकथानकं गलति तेऽखिलम् ॥

४. निजविलोकितं यदि निभाल्यते ।
विषयसङ्गिता क्नु विभाव्यते ॥

५. नयनदृश्ययोर्गगनमन्तरम् ।
समवलोकयन्भज विभुं परम् ॥

६. विषयवर्जनाद्विषयिणि स्थिरे ।
सकलसिद्धयो यतधियः करे ॥

७. रसननीरगे मनसि सन्ततम् ।
करगतं सुखं भवति निश्चितम् ॥

८. गमय मस्तकात्कुलगृहानलम् ।
अवतरन्निव स्मृतिमिदं त्वलम् ॥

९. स्मरणसर्पिषा कुलगृहे शिखी ।
ज्वलति यस्य स क्षितितले मखी ॥

१०. यदि शशी द्रवेत्कुलशिखित्विषा ।
अमृततः शमं व्रजति न स्तृषा ॥

११. चलतमं मनः प्रशममेति नः ।
स्मरणयुक्तया श्वसितयात्रया ॥

१२. निजचितिस्मृतिर्यदि न विच्युता ।
भवति योगिता सुलभसाधिता ॥

१३. दशशतच्छदस्थितमनाः सदा ।
अनुभवेन्महोमहददो मुदा ॥

१४. भवति निष्ठितो यदि चतुष्पथे ।
महसि लीयते धृतजगत्कथे ॥

१५. अयि विचिन्तय स्ववपुरुत्तरम् ।
वशमितं भवेत्तव महत्तरम् ॥

१६. परमशक्तये स्ववपुरर्प्यताम् ।
अयि किमद्भुतं भवति दृश्यताम् ॥

१७. करणशक्तिवित्कृतिषु राजते ।
गमनशक्तिविद्गतिषु शोभते ॥

१८. श्रवणशक्तिविच्छ्रुतिषु न स्खलेत् ।
मननशक्तिविन्मतिषु नो पतेत् ॥

१९. अतुलसिद्धिदानिह पृथग्विधान् ।
मुनिवरोऽभ्यधादिति तपः पथान् ॥

२०. बहुलयोगिवाङ्मथनतोऽमृतम् ।
अनुभवक्षमं तदिदमाहृतम् ॥



इति श्रीभगवन्महर्षिरमणान्तेवासिनो वासिष्ठस्य

नरसिंहसूनोर्गणपतेः कृतिर्गीतमाला

